| | | |
|---|---|---|
| प्रथमावृत्तिः | 1950 | 2000 |
| द्वितीयावृत्तिः | 1952 | 2000 |
| तृतीयावृत्तिः | 1955 | 2000 |
| चतुर्थावृत्तिः | 1956 | 3000 |
| पञ्चमावृत्तिः | 1959 | 3000 |

*Approved for class use by the Andhra Pradesh Text Book Committee vide Page 3123 of Part I of Andhra Pradesh Gazette, dated 18th December, 1958.*

*Paper used :*
*Double Crown 24 lbs. White Printing.*

श्री वेदव्यास मुद्राक्षरशाला,
चित्तूरु.

# अनुक्रमणिका



| पाठः | शीर्षकम् | | पुटसंख्या |
|---|---|---|---|
| | मातृवन्दनम् | .... | १ |
| १. | गृहम् | .... | २ |
| २. | पाठशाला | .... | ३ |
| ३. | धेनुः महिषी च | .... | ५ |
| ४. | क्रीडनम् | .... | ७ |
| ५. | पर्वतः | .... | १० |
| ६. | देवस्तुतिः | .... | १२ |
| ७. | इक्षुः | .... | १४ |
| ८. | काकः जम्बुकश्च | .... | १६ |
| ९. | अश्वः | .... | १८ |
| १०. | कृषीवलः | .... | २१ |
| ११. | माता का ? | .... | २३ |
| १२. | कालियदमनम् | .... | २५ |
| १३. | तिथयः | .... | २८ |
| १४. | भरतः | .... | ३० |

वन्दे मातरम् !



# मातृवन्दनम्

वन्दे भारतदेवी मार्यमातरम्। जयतु जयतु पदयुगलं ते निरन्तरम्

शुभ्रशरच्चन्द्रयुक्तचारुयामिनीम्,
विकसितनवकुसुममृदुलदामशोभिनीम्,
मन्दस्मितयुक्तवदनमधुरभाषिणीम्,
सुजलां-सुफलां-सरलां-शिववरदां,
चिरसुखदां मुकुलरदां देशमातरम् (आर्यमातरम्)

दशकत्रयकोटिजनकण्ठनादिनीम्,
अमितभुजां धृतसदसिं तनयतारिणीम्,
हिमनगजां स्वाभिमानबुद्धिदायिनीम्,
कमलां-अमलां-अतुलां रिपुहारिणीम्,
बलकारिणीं धृतनलिनीं लोकमातरम् (आर्यमातरम्)

धर्मस्त्वं मर्म त्वं त्वं यशो बलम्,
शक्तिस्त्वं कर्म चाखिलम्,
प्रतिसदनं प्रतिमा ते त्वं महाफलम्,
धरणीं-भरणीं-जननीं-कविप्रतिभां,
नतसुलभां जगदम्बां राष्ट्रमातरम् (आर्यमातरम्)



प्रथमः पाठः

# गृहम्

| | | | | |
|---|---|---|---|---|
| इदं | तत् | मम | दारु | कवाटं |
| अहं | द्वारम् | तव | स्तम्भः | गवाक्षं |
| त्वं | अस्य | तस्य | कुड्यं | भित्तिः |



इदं मम गृहम्। त्वं मम गृहं पश्य। गृहस्य पुरतः स्तम्भाः सन्ति। स्तम्भाः भूमौ तिष्ठन्ति। स्तम्भानां उपरि दारु वर्तते। गृहस्य द्वारे कवाटं अस्ति।

कुड्ये गवाक्षं अस्ति। तव गृहे अपि स्तम्भाः सन्ति किम्? कुडये गवाक्षाणि सन्ति किम्? तस्य भित्तिः अस्ति किम्? तस्य द्वारं अस्ति किम्?

मम गृहे अहं प्रविशामि। अयं गोपालः मम गृहं प्रविशति। त्वं अपि प्रविश। त्वं मम गृहस्य गवाक्षं पश्य। त्वं श्रीकृष्णं नम। त्वं मम गृहे तिष्ठ।

पाठ्यम् – स्तम्भैर्युता कवाटैश्च द्वारैः भित्त्या च दारुभिः ।
छदनेन वितर्द्या च शालाऽतीव प्रकाशते ॥

प्रश्नाः – किं तव गृहम्? किं तस्य गृहम्? किं कृष्णस्य गृहम्? तव गृहे कति स्तम्भाः सन्ति? भित्तिः अस्ति किम्? कवाटं अस्ति किम्? तस्य गृहे स्तम्भः नास्ति वा? दारु कुत्र अस्ति? त्वं किं करोषि? सः किं करोति? अहं किं करोमि?

---

### द्वितीयः पाठः

## पाठशाला

| | | | | |
|---|---|---|---|---|
| उपाध्यायः | पठति | पुस्तकम् | कक्ष्या | सहपाठकाः |
| पाठः | छात्रः | जानाति | बोधयति | कृष्णफलकम् |




इयं मम पाठशाला । अयं मम उपाध्यायः । अयं मम

सहपाठकः। इमौ मम सहपाठकौ। इमे मम सहपाठकाः। इमौ मम उपाध्यायौ। इमे मम उपाध्यायाः। इमे छात्राः।

मम उपाध्यायः छात्रान् पाठं बोधयति। ते छात्राः पाठं जानन्ति। उपाध्यायाः छात्रान् बोधयन्ति। ते पाठान् पठन्ति। अयं बालः पाठं पठति। अहं पाठं जानामि।

मम कक्ष्यायां चत्वारिंशत् छात्राः पठन्ति। उपाध्यायः पाठं पठति। उपाध्यायः कृष्णफलके पाठं लिखति। तं अहं पुस्तके लिखामि। सर्वे छात्राः पाठं पुस्तकेषु लिखन्ति।

इयं पाठशाला प्रातः सायं च प्रचलति। अहं सायं सहपाठकैः सह क्रीडामि।

---

पाठ्यम् – गुरुर्वदति यं पाठं तं पठित्वा दृढं ततः।
क्रीडाङ्गणेऽहं खेलामि मिलितः सहपाठकैः॥

प्रश्नाः – इयं का? इयं कस्य? इमे के? इमौ कौ? उपाध्यायः किं बोधयति? त्वं सायङ्काले किं करोषि? सर्वे छात्राः कक्ष्यायां किं कुर्वन्ति? उपाध्यायः कृष्णफलके किं करोति? तव पाठशाला कदा प्रचलति? त्वं कैः सह क्रीडसि?



तृतीयः पाठः

# धेनुः महिषी च

| सास्ना | पिबति | तक्रं |
| --- | --- | --- |
| नवनीतम् | वत्सः | लाङ्गूलम् |




एषा धेनुः। सा महिषी। धेनुः महिषी च समाने भवतः। किं जानासि अनयोः भेदम्? धेनोः कण्ठे सास्ना अस्ति। महिष्याः गळे सास्ना नास्ति। अयं एव मुख्यः भेदः।

धेनोः द्वे शृङ्गे द्वौ कर्णौ द्वे नेत्रे च स्तः। अस्याः चत्वारः पादाः सन्ति; एकं लाङ्गूलं च अस्ति। तथैव महिष्याः अपि चत्वारः पादाः द्वौ कर्णौ द्वे नेत्रे द्वे शृङ्गे एकं लाङ्गूलं च सन्ति। धेनुः प्रतिदिनं वत्साय क्षीरं ददाति।

धेनोः क्षीरं मधुरं भवति। धेनोः क्षीरेण शिशून् पोषयन्ति। महिष्याः क्षीरं शिशूनां पथ्यं न भवति। महिष्याः दुग्धं कापिकापानीये अतीव उपयुज्यते।

अम्लेन सिक्तं दुग्धं दधि भवति। दधि मथित्वा नवनीतं पृथक् कुर्वन्ति। शिष्टं तक्रं भवति। नवनीतं क्वथयित्वा घृतं साधयन्ति। घृतेन श्रोत्रियाः यागान् कुर्वन्ति। महिष्याः क्षीरे घृतं अधिकं भवति। घृतं आहारे उपयुज्यते। घृतपक्काः अपूपाः स्वादुतराः भवन्ति।

---

**पाठ्यम्** – धेनोः पदानि चत्वारि द्वौ कर्णौ द्वे च चक्षुषी।
लाङ्गूलमेकं द्वे शृङ्गे न स्तो वत्सस्य शृङ्गके॥

**प्रश्नाः** – धेनोः क्षीरं कीदृशं भवति? महिष्याः पादाः कति? वत्सस्य नेत्राणि कति? धेनोः कर्णाः कति? कति लाङ्गूलानि वत्सस्य? दधि कथं भवति? तक्रं नाम किम्? घृतेन किं प्रयोजनम्? धेनोः महिष्याश्च को भेदः?

**पर्यायपदानि** – धेनुः = गौः, क्षीरं = दुग्धं, पादाः = पदानि, नेत्रं = चक्षुः, अयं = एषः, इयं = एषा, इदं = एतत्।

**योग्यमक्षरं लिख** – अहं दुग्धं पिबा —, त्वं क्षीरं पिब —, स गोपालः क्षीरं पिब —, उपाध्यायाः जलं पिब —।

## चतुर्थः पाठः

# क्रीडनम्

| | | | |
|---|---|---|---|
| अस्माकं | उत्पतति | आह्वयति | हसति |
| यतमानः | विपक्षाः | लज्जन्ते | क्रीडाङ्गणम् |



इदं अस्माकं क्रीडाङ्गणम्। मम सहपाठकाः सर्वे अपि खेलन्ति अत्र प्रतिदिनम्। अहं अपि अत्र आगच्छामि। अत्र केचित् कन्दुकेन क्रीडन्ति। केचन वक्रदण्डैः खेलन्ति। अन्ये च धावन्ति। अपरे उत्पतन्ति च। मम सहपाठकः मां आह्वयति। अहं अपि तत्र गत्वा तैः सह क्रीडामि।

अहं कन्दुकक्रीडां न जानामि। मम धावने उत्पतने च अधिकं नैपुण्यं वर्तते। तस्मात् धावतां सङ्घे प्रविशामि।

अहो! मां ग्रहीतुं यतमानः कश्चित् मां अनुधावति। कथमपि मां तस्माद्रक्षामि। अहं दूरं आगतवान्। सः दूरे एव स्थितवान्। तस्मात् मम भयं नास्ति। इदानीं अहं तं ग्रहीतुं यत्नं करोमि। अयं मया गृहीतः। अहं तं गृहीतवान्।

मम पक्षे स्थिताः सर्वे हसन्ति। विपक्षाः लज्जन्ते। ते जिताः। वयं विजयवन्तः। सायङ्कालः भवति। अतः गृहं गच्छामः।

---

पाठ्यम् – धावन्ति तिष्ठन्ति तथोत्पतन्ति
तं कन्दुकं चांघ्रिभिरुत्क्षिपन्ति।
अन्ये च खेलन्ति पतन्ति भूमौ
हसन्ति पश्यन्ति पुनर्यतन्ते॥

प्रश्नाः – क्रीडाङ्गणे तव सहपाठकाः किं कुर्वन्ति? अन्ये किं कुर्वन्ति? अपरे किं कुर्वन्ति? तव कस्मिन् नैपुण्यं वर्तते? तव कन्दुकक्रीडायां नैपुण्यं वर्तते वा? त्वं जितः वा? जयवान् वा? तव सहपाठकः जितो वा? कः लज्जते? के हसन्ति? त्वं किमर्थं यत्नं करोषि?

अस्मिन् पर्वते गुहाः विद्यन्ते। तासु गुहासु सिंहाः, व्याघ्राः, भल्लूकाः च दिवा वसन्ति। रात्रौ ते क्रूरमृगाः बहिः आगच्छन्ति, इतस्ततः चरन्ति, भक्षयन्ति च क्षुद्रान् मृगान्। अस्मिन् गिरौ हरिणः तिष्ठति। हरिणाः नानाविधाः। व्याधाः सारमेयसाहाय्येन हरिणान् गृह्णन्ति। हरिणाः सौम्याः जन्तवः। पुरा महर्षयः आश्रमेषु हरिणान् रक्षन्ति स्म।

---

पाठ्यम् – सिंहो व्याघ्रश्च हरिणो भल्लूको वानरस्तथा।
खड्गो वृकश्चित्रकायः गजश्चारण्यवासिनः॥

प्रश्नाः – सिंहादयः कुत्र निवसन्ति? अरण्ये के के मृगाः निवसन्ति? तेषु क्रूरमृगाः के? तेषु सौम्यः मृगः कः? ग्राममृगाः के? सारमेयः कीदृशः मृगः? सिंहादयः कथमरण्ये जीवन्ति?

पर्यायपदानि – यतन्ते=यत्नं कुर्वन्ति, उपयुज्यन्ते = उपयुक्ताः भवन्ति, जीवन्ति = जीवनं कुर्वन्ति, व्याधाः = मृगहिंसकाः, सारमेयः = शुनकः, विद्यन्ते = सन्ति, गुहा = बिलम्, हरिणः = सारङ्गः, पर्वतः = गिरिः।

शून्यस्थलं योग्यपदेन पूरयत —

दिवा सिंहाः — निलीनाः तिष्ठन्ति। रात्रौ ते — चरन्ति। सारमेयाः सर्वदा — चरन्ति। मृगेषु हरिणः — जन्तुः। व्याधाः वनेषु — घ्नन्ति।

## षष्ठः पाठः

# देवस्तुतिः



करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥ १ ॥



वीणापुस्तकहस्तां पितामहस्य प्रियां धवलदेहाम् ।
हंसारूढां देवीं सरस्वतीं नौमि शतकृत्वः ॥ २ ॥

क्षीरसागरसञ्जातां विष्णोः पत्नीं दयामयीम् ।
लक्ष्मीं सदा प्रपद्येऽहं सर्वसम्पत्समृद्धये ॥ ३ ॥





अगजाननपद्मार्कं गजाननमहर्निशम् ।
अनेकदं तं भक्तानामेकदन्तमुपास्महे ॥ ४ ॥



नमामि नारायणपादपङ्कजं
करोमि नारायणपूजनं सदा ।
वदामि नारायणनाम निर्मलं
स्मरामि नारायणतत्त्वमव्ययम् ॥ ५ ॥



चन्द्राननार्धदेहाय चन्द्रांशुसितमूर्तये ।
चन्द्रार्कानलनेत्राय चन्द्रार्धशिरसे नमः ॥ ६ ॥



श्रीरामचन्द्रः श्रितपारिजातः
समस्तकल्याणगुणाभिरामः ।
सीतामुखाम्भोरुहचञ्चरीको
निरन्तरं मङ्गलमातनोतु ॥ ७ ॥



श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥ ८ ॥

---

**प्रश्नाः** – प्रथमश्लोके कं वन्दसे ? सरस्वती कीदृशी भवति ? लक्ष्मीः कथं भूता ? गजाननः कीदृशः ? नारायणं कथं सेवसे ?

**सन्धिः** – मुख + अरविन्दम् = मुखारविन्दम् । गिरि + ईशः = गिरीशः । गुरु + उक्तिः = गुरूक्तिः । पितृ + ऋणं = पितॄणम् । (अ + अ = आ; इ + इ = ई; उ+उ = ऊ; ऋ + ऋ = ॠ । सवर्णदीर्घसन्धिः)

**पर्यायपदानि** – अरविन्दं = अम्भोरुहं, पङ्कजम् । करः = हस्तः । नौमि = वन्दे । स्मरामि = चिन्तयामि ।

सप्तमः पाठः

# इक्षुः

| कटाहः | अपूपः | कार्मिकः |
| --- | --- | --- |
| गुडम् | यन्त्रम् | पर्व |



चित्रं पश्य। इदं इक्षुक्षेत्रम्। इक्षुः उन्नततया वर्धते। इक्षुं निपीड्य रसं सम्पादयन्ति। इक्षुरसः अतीव मधुरः। इक्षुरसं कटाहे निक्षिप्य अग्निना शोषयन्ति। तत् गुडं भवति। गुडेन कृतः अपूपः पायसं च मधुरे भवतः।

इक्षुं यन्त्रेषु प्रक्षिप्य शर्करां कुर्वन्ति। शर्करायाः वर्णः श्वेतः। गुडस्य वर्णः रक्तः। शर्करया क्रियमाणानि भक्ष्याणि अतीव मधुराणि भवन्ति। अस्मद्देशे बहवः शर्करालयाः सन्ति। शर्करालयेषु सहस्राधिकाः कार्मिकाः कर्म कुर्वन्ति।

इक्षौ बहूनि पर्वाणि वर्तन्ते। वंशः अपि इक्षुः इव उन्नततया वर्धते। तस्यापि पर्वाणि सन्ति। वंशः गृहनिर्माणाय उपयुज्यते। वंशः कठिनः। इक्षुः मृदुः। बालाः इक्षुं दन्तैः दष्ट्वा रसं पिबन्ति। अहं इक्षुं भक्षयामि।

---

**पाठ्यम्** – भारतं चेक्षुदण्डं च शुक्लपक्षं च वर्णय।
अत्र दोयकविब्रूते सारं पर्वणि पर्वणि॥

**प्रश्नाः** – इक्षुः कथं वर्धते? इक्षुरसः कीदृशः? गुडेन किं कुर्वन्ति? गुडस्य वर्णः कः? शर्करायाः वर्णः कः? शर्करां कथं कुर्वन्ति? वंशस्य पर्वाणि सन्ति वा? वंशः कस्मै उपयुज्यते? गुडस्य शर्करायाश्च वर्णः कः?

**शून्यभागं पूरयत** – इक्षुरसः — मधुरः। इक्षौ — पर्वाणि वर्तन्ते। गुडस्य — रक्तः।

**पर्यायपदानि** – अतीव – अत्यन्तम्। बहवः – अनेके।

**पदानि संयोज्य वाक्यं रचयत** —

| | | |
|---|---|---|
| (१) वंशः | (४) अपि | (७) निपीड्य |
| (२) इक्षुः | (५) उन्नततया | (८) रसं |
| (३) इव | (६) वर्धते | (९) इक्षुं |

(१०) सम्पादयन्ति

अष्टमः पाठः

# काकः जम्बुकश्च

| बुभुक्षितः | अपूपः | आहूय | स्तुतवान् |
|---|---|---|---|
| आपूपिकः | कियत् | श्रावय | झटिति |



कश्चित् काकः बुभुक्षितः इतस्ततः भ्रमति स्म। तदा कश्चित् आपूपिकः अपूपभाण्डं शिरसि निक्षिप्य 'अपूपः, अपूपः' इति विक्रीणाति। तं वञ्चयित्वा काकः आकाशमार्गेण एकं अपूपं अपाहरत्, पलायित्वा च वृक्षस्य शाखायामुपाविशत्। अचिन्तयच्च "अहो! मया महत् भाग्यं कृतम्" इति।

तदैव कश्चित् जम्बुकः तस्य वृक्षस्य छायां प्राप्तवान्। सोऽपि अतीव बुभुक्षितः आसीत्। सः दैवं निन्दितुं यदा

आकाशं अपश्यत् तदा काकस्य मुखे अपूपमपश्यत् । तं दृष्ट्वा सः अचिन्तयत् "अहो! काकेन कियत् पुण्यं कृतम् । अयं अपूपं सम्पादितवान् किल! भवतु । उपायेन एनं अपूपं अपहरामि" इति ।

ततः काकं आहूय "मित्र! चिरात् त्वां पश्यामि । सर्व कुशलं वा? त्वं अतीव सुन्दरः । तव शरीरमिव तव स्वरः अपि अतीव मधुरः । तव गीतं श्रुत्वा महान् कालः आसीत् । अतः किञ्चित् तव गानं श्रावय" इति स्तुतवान् । एवं बहुधा स्तुतः काकः यदा गानं कर्तुं मुखं उद्घाटितवान् तदैव मुखस्थः अपूपः जम्बुकस्य पुरतः अपतत् । वञ्चकः जम्बुकः झडिति तदादाय भक्षयित्वा धावितवान् ।

अतः वञ्चकः वञ्चकान्तरेण वञ्च्यते ।

---

**पाठ्यम्** – मातृवत् परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत् सर्वभूतेषु यः पश्यति स पश्यति ॥

**प्रश्नाः** – काकः अपूपं कथं सम्पादितवान्? जम्बुकः काकं दृष्ट्वा किं अचिन्तयत्? जम्बुकः काकात् अपूपं कथं अपहृतवान्?

**क्त्वाप्रत्ययान्तानि अव्ययानि** —

वञ्चयित्वा, पलायित्वा, दृष्ट्वा, श्रुत्वा, भक्षयित्वा ।

**तुमुन्प्रत्ययान्तानि अव्ययानि** —

निन्दितुम्, कर्तुम्, भक्षयितुम्, द्रष्टुम्, श्रोतुम् ।

नवमः पाठः

# अश्वः

| शफः | तैलशकटः | मूल्यं |
|---|---|---|
| बहुलाः | उष्ट्रः | लेखवाहकाः |
| | उत्सवयात्रा | |



अश्वः ग्राम्यः पशुः। अयं सुन्दरः, विश्वासयुक्तः च भवति। अस्य चत्वारः पादाः, द्वौ कर्णौ, द्वे नेत्रे, एकं लाङ्गूलं च सन्ति। अस्य एकैकस्मिन् पादे एकैकः एव शफः विद्यते। धेनोः महिषस्य च एकैकस्मिन् पादे द्वौ द्वौ शफौ स्तः। अतः

महिषादयः "द्विशफाः" इत्युच्यन्ते । अश्वाः तु एकशफाः । एवमेव गर्दभः उष्ट्रः च एकशफौ भवतः ।

अश्वः अतीव वेगेन धावति । अतः अयं तुरगः, तुरङ्गः इति व्यवह्रियते । पूर्वकाले धूमशकटाः तैलशकटाश्च नासन् । तदा तुरगाः एव लेखवाहकाः अभवन् । ते एव शीघ्रप्रयाणे उपयुक्ताः आसन् ।

इदानीमपि ते युद्धे सर्वत्र उपयुज्यन्ते । केषुचित् देशेषु तैः भूमिं कृषन्ति । अस्मद्देशे सर्वत्र अश्वशकटा एव बहुलाः भवन्ति । राजानः धनिकाः भूस्वामिनः च अश्वान् रक्षन्ति । ते स्वशकटेषु द्वौ वा चतुरः वा अश्वान् योजयन्ति । उत्सवयात्रासमये च सामान्या अपि जनाः शकटे बहूनश्वान् योजयन्ति ।

अश्वाः धवलाः, अरुणाः, नीलाः, चित्रवर्णाः च सन्ति । तेषां मूल्यं शतमारभ्य सहस्रपर्यन्तं भवति । केचिदश्वाः युद्धे स्वपृष्ठमारूढवतः योधस्य प्राणानपि रक्षन्ति । भयङ्करे युद्धे अपि ते भीतिं विहाय सञ्चरन्ति । अतः एव राजानः अश्वान् पूजयन्ति ।

**पाठ्यम्** – करोति क्रियते चैव तथा पश्यति दृश्यते।
हरति ह्रियते तद्वत् शृणोति श्रूयतेऽपि च॥
युंक्ते च युज्यते वक्ति चोच्यते पीयते कथम्?

**उपसर्गयोगात् धातोः अर्थः भिद्यते। यथा —**

हरति; अपहरति; संहरति; आहरति; प्रहरति; परिहरति; विहरति; व्यवहरति।

गच्छति; आगच्छति; अनुगच्छति; संगच्छते।

चरति; प्रचरति; विचरति; अनुचरति; परिचरति; आचरति; अभिचरति।

**सन्धिः** – एक + एकः = एकैकः; जल + ओघः = जलौघः; गुण + औन्नत्यम् = गुणौन्नत्यम्; जन + ऐक्यम् = जनैक्यम्; (अ + ए = ऐ; अ + ओ = औ; अ + औ = औ; अ + ऐ = ऐ; वृद्धिसन्धिः) तुरगाः + एव = तुरगा एव; शकटाः + एव = शकटा एव; सामान्याः + अपि = सामान्या अपि; (स्वरे परे आकारोत्तरविसर्गस्य लोपः)

---

## दशमः पाठः

# कृषीवलः

| | | | |
|---|---|---|---|
| कृषिकर्म | लवित्रम् | मुसलम् | व्रीहिः |
| खलः | शूर्पः | धान्यगुच्छः | उलूखलम् |
| तण्डुलः | तुषः | घटीयन्त्रम् | हलः |



यः कृषिकर्म करोति सः कृषीवलः। कृषीवलः हलेन भूमिं कृषति। जलेन भूमिं सिञ्चति। ततः व्रीहीन् आवपति। व्रीहयः भूमौ रोहन्ति। क्रमशः सस्यानि वर्धन्ते। सस्यानामुपरि-भागे धान्यगुच्छाः संभवन्ति। पक्वान् तान् लवित्रैः आलूय खलं नीत्वा प्रहरन्ति। पृथक्कृतं धान्यं उलूखले निक्षिप्य मुसलेन कुट्टयन्ति। तेन तुषाः विमुच्यन्ते। स्त्रियः शूर्पैः

उत्पवनादिना तण्डुलं शोधयन्ति। तण्डुलं पक्त्वा अन्नं वयं भक्षयामः।

वृषभौ कृषीवलस्य अनेकधा उपकुरुतः। तौ हलं कर्षतः। घटीयन्त्रेण बद्धौ जलं आकर्षतः। शकटे नियुक्तौ धान्यादिकं वहतः। वृषभाः पलालं, बुसं, पिण्याकञ्च भक्षयन्ति।

अयं कृषिप्रधानः देशः। अत्र बहवः जनाः कृषिकर्मणा जीवन्ति। कृषेः अनुकूलाः नद्यः, नद्यः, तटाकाः, जलाशयाश्च अस्माकं देशे बहवः सन्ति। जलाशयेषु जलं पूरयित्वा कृषये उपयुञ्जते।

---

पाठ्यम् – कृषिप्रधाने देशेऽस्मिन् पूजनीयाः कृषीवलाः।
जीवयन्ति हि भूतानि चाहारैस्तण्डुलादिभिः॥

प्रश्नाः – को नाम कृषीवलः? सः सस्योत्पादनाय किं करोति?
स्त्रियः कथं तण्डुलं शोधयन्ति? कृषीवलोपकारिणः के के?
वृषभाः कृषीवलेभ्यः कथमुपकुर्वन्ति? वृषभस्य आहाराः के?

यथायोग्यं पूरयत – जलेन — सिञ्चति। क्षेत्रे क्रमशः सस्यानि —।
मुसलेन — विमुच्यन्ते। वृषभाः — — — अदन्ति।
धान्यगुच्छान् — आलूय — नीत्वा —। तुषविमुक्तं —
वयं भक्षयामः।

सन्धिः – पिण्याकं + च = पिण्याकञ्च; उपयुं + जते = उपयुञ्जते;
खलं + नीत्वा = खलन्नीत्वा (० + पञ्चमवर्गाक्षरयोगे परवर्गपञ्चमो भवति। अनुनासिकसन्धिः)।

# एकादशः पाठः

## माता का ?

| | | | |
|---|---|---|---|
| ृही | सपत्नी | अभणत् | दीयताम् |
| जनी | कारागृहम् | विवदमाना | अशाययत् |



एकस्मिन् गृहे कस्यचित् गृहिणः द्वे भार्ये अवर्तेताम्। तयोरुभयोरपि एकैकस्याः एकैकः पुत्रः अवर्तत। कस्याञ्चित् रजन्यामेकस्याः कुमारः दैववशात् मृतिमगमत्। तज्जननी मृतं स्वशिशुं सपत्न्याः शयने निधाय तत्तनयं स्वशयने अशाययत्।

ततः प्रभाते जीवन्तं शिशुं स्वस्वपुत्रत्वेन विवदमाने ते स्त्रियौ, राज्ञो निकटमगच्छताम्। राजा तयोर्विवादमाकर्ण्य साक्ष्यभावात् तत्र कञ्चिदुपायं अचिन्तयत्। सः "एनं शिशुं छित्वा एकैकस्यै एकैकं खण्डं दिशत" इति भृत्यानादिशत्। एतत् श्रुत्वा सपत्नी राजानमभणत् – "आवयोरुभयोरपि पुत्रो माऽस्तु, यथाऽऽज्ञप्तं क्रियता"मिति। अन्या तु सभयं कम्पमाना, पुत्रमृतिमसहमाना राजानमवदत् – "हे देव! पुत्रस्तस्यै एव दीयताम्। यथाकथञ्चिदपि पुत्रो जीवतु, मा हन्यता"मिति। एतत् आकर्ण्य राजा शिशुवधमसहमानामेव तज्जननीं विज्ञाय तस्या हस्ते पुत्रं दातुमाज्ञाप्य अन्यां कारागृहं प्रापयत्।

---

**पाठ्यम्** – पिता माता पितृव्यश्च मातुलश्च पितामहः।
मातामहश्च श्वश्रूश्च श्वशुरः श्यालदेवरौ।
पितृष्वसा तथा मातृष्वसा चैव स्वबान्धवाः॥

**प्रश्नाः** – सपत्नी रात्रौ किमकरोत्? राजा कं उपायमचिन्तयत्? तदा सपत्नी किमभणत्? माता किमभणत्? राजा किमकरोत्?

**सन्धिः** – तयोः + विवादं = तयोर्विवादम्; आवयोः + उभयोः + अपि = आवयोरुभयोरपि (अकारभिन्नः स्वरः + ः = मृदुहल अचा वा योगे र् (रेफः) भवति)।

राज्ञः + निकटं = राज्ञो निकटं; पुत्रः + मास्तु = पुत्रो मास्तु; पुत्रः + जीवतु = पुत्रो जीवतु; अ + ः = मृदुहला योगे ओकारो भवति )

द्वादशः पाठः

# कालियदमनम्

| | | | |
|---|---|---|---|
| ह्रदः | कदम्बवृक्षः | | जगाम |
| फणा | म्रियन्ते | | दमनम् |
| मृतप्रायः | आरेभे | नदी | नदः |



पुरा द्वापरयुगे भगवान् श्रीकृष्णरूपेण नन्दगोपगृहे निवसति स्म। तदा यमुनासमीपवर्तिनि ह्रदे कालियो नाम

कश्चित् क्रूरः सर्पः आसीत्। सः परिवारसहितः प्रतिदिनं स्वविषं जले वमति स्म। तेन सर्वमपि ह्रदजलं विषजलमिवाभवत्। तज्जलं ये पिबन्ति ते तदैव म्रियन्ते स्म। अतः कोऽपि तस्य ह्रदस्य समीपमपि न गच्छति स्म।

कदाचित् गोपबालकैः क्रीडन् कृष्णः तस्य ह्रदस्य तीरं प्राप। अगाधजलसन्दर्शनेन प्रमुदितमनाः कृष्णः जलसमीपं यदा गतवान् तदा मित्रैः 'विषमयमिदं जल' मिति निवारितः। तत्र कालियो नाम सर्पराजस्तिष्ठतीति मित्रमुखात् श्रुत्वा जातकोपः कृष्णः कदम्बवृक्षमारुह्य जले निपपात। कालियोऽपि तं शब्दं निशम्य क्रुद्धो यावत् बहिरागत्य ददर्श तावत् कृष्णः तस्य फणासु पादेन ताडयामास। तेन प्रहृतः कालियः किञ्चिन्मूर्छितोऽपि कृष्णं स्वकायेन बबन्ध। तदा कृष्णो युक्त्या तद्बन्धनं विमुच्य क्षणात्तस्य फणोपरि आरुह्य नर्तितुमारेभे। तेन कालियः मृतप्रायोऽभवत्। तद्विदित्वा तत्पत्न्यः श्रीकृष्णसमीपमागत्य स्वभर्तुः प्राणभिक्षां प्रार्थयन्त। दयानिधिः कृष्णोऽपि 'इमं ह्रदं विहाय गच्छत' इत्युक्त्वा तं विससर्ज। चिरात् लब्धसंज्ञः कालियः बन्धुपरिवारसहितः तं ह्रदं त्यक्त्वा समुद्रं प्रति प्रययौ। मित्रैः देवैश्च बहुधा स्तुतः श्रीकृष्णः गोपालबालकैः सह गोकुलं जगाम।

**पाठ्यम्** – उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये।
पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥

**प्रश्नाः** – कालियः कुत्र आसीत्? तेन कृतः अपकारः कः? सः केन दण्डितः? कृष्णः तं कुतः विससर्ज? सः कुत्र जगाम? कालियस्य पत्न्यः श्रीकृष्णं किं प्रार्थयन्त?

**वाक्येषु योजयत** – यदा - तदा; यावत् - तावत्; चिरात्; बहुधा।

**अर्थः** – निवसति स्म = न्यवसत्; ददर्श = अपश्यत्; आसीत्=अभवत्; प्राप=प्रापत् = अगच्छत्; निपपात = न्यपतत्; ताडयामास = अताडयत्; बबन्ध = अबध्नात्; आरेभे = आरभत; विससर्ज = व्यसृजत्; प्रययौ = प्रायात् = अगच्छत्; जगाम = अगच्छत् (अत्र पाठे बहवः क्रियाः पौराणिक-भूतकाले उपयुक्ताः।

**सन्धिः** – तत् + विदित्वा = तद्विदित्वा; यावत् + बहिः=यावद्बहिः; वाक् + बलं = वाग्बलम् (पदान्तानां अनुनासिकेतरवर्गहलां स्ववर्गतृतीयो भवति अचा मृदुहला वा योगे)

---

श्री - तद्वा ? शुक्लपक्षः, कृष्णपक्षः इति द्वौ पक्षौ किल ? तत्र शुक्लपक्षस्य अन्तिमा तिथिः 'पूर्णिमा' इति, कृष्णपक्षस्य अन्तिमा तिथिः 'अमावास्या' इति च उच्यते ।

गो - अरे! पूर्णिमा इति नाम कुतः ? कार्णिमा इति कुतो नास्ति?

श्री - अरे वक्र ! पूर्णिमायां चन्द्रः पूर्णः भवति । अतः 'पूर्णिमा' इति तस्याः नाम भवति । अमायां चन्द्रः न शोभते । अतः 'अमा' इति 'अमावास्या' इति च वदन्ति ।

गो - तथा वा! अस्तु । त्वं एकादश्यामेव कुतः देवालयं गच्छसि?

श्री - एकादशी विष्णुतिथिः । तस्यां उपवासं कृत्वा यः भगवन्तं नमति सः सुखी भवति, पुण्यं च लभते ।

गो - एवं वा ! तथा चेत् अहमपि आगच्छामि । उभावपि देवालयं गच्छावः ।

उभौ भजनं कुरुतः ।

हरे राम हरे राम राम राम हरे हरे ।
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ॥

---

प्रश्नः – त्वं एकादश्यामेव कुतः देवालयं गच्छसि ?

न्धिः – कृष्णपक्षः + च = कृष्णपक्षश्च; ताः + तिथयः=तास्तिथयः; खगः + टिट्टिभः = खगष्टिट्टिभः (विसर्गः च-छाभ्यां योगे 'श्' भवति; त-थाभ्यां योगे सकारो भवति; ट-ठाभ्यां योगे षकारो भवति )।

ल्यप् प्रत्ययान्तानि अव्ययानि—

आ + नीत्वा = आनीय; आ + गत्वा = आगत्य; आ + रूढ्वा = आरुह्य; नि + शमित्वा = निशम्य (उपसर्गयो धातोः क्त्वाप्रत्ययस्थाने ल्यप् प्रत्ययो भवति )।

## चतुर्दशः पाठः

# भरतः



पुरा दुष्यन्त इति कश्चित् राजा बभूव। सः कदाचित् मृगयार्थं वनं जगाम। मृगयापरिश्रान्तः सः कण्वमहर्षेः आश्र ययौ। तत्र शकुन्तलां नाम कन्यां चकमे। तां स गान्धर्व विधिना उपयेमे। कश्चित्कालानन्तरं तां त्यक्त्वा स नगरं प्राप

राजभोगलालितः दुष्यन्तः शकुन्तलां विसस्मार। चिरात् भर्ता नागतवानिति शकुन्तला ऋषिकुमारैः सह दुष्यन्तसभामाप। दुष्यन्तः "त्वं न मया परिणीते" ति गर्भिणीं तां तिरश्चकार।

सा मारीचमहर्षेः आश्रमे उवास। दशमे मासे चक्रवर्तिलक्षणोपेतं कुमारं सुषुवे। महर्षिः "सर्वदमनः" इति तस्य नाम चकार। स बाल्ये सिंहशिशुभिः चिक्रीड। सः धर्मेण राज्यं बभार। अतः 'भरत' इति नाम भेजे। तस्मिन् राज्यं पालयति सति प्रजाः सुखेन ववृतिरे। तेन सुरक्षितत्वात् अयं देशः भारतदेशः, भारतवर्षः, भरतखण्डः इति च अद्यापि व्यवह्रियते।

---

पाठ्यम् – गच्छति पुरश्शरीरं धावति पश्चादसंस्तुतं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य॥

प्रश्नाः – भरतः कस्य पुत्रः? तस्य मातुः नाम किम्? भरतस्य नामान्तरं किम्? भरतः राज्यं कथं पालयामास? भारतदेश इति नाम कस्य कुतः अभूत्?

अव्ययानि – तत्र, अत्र, इति, च, चिरात्, सह, एव।

अर्थाः – बभूव = अभवत्; जगाम = अगच्छत्; ययौ = अयात्; चकमे=अकामयत; उपयेमे=उपायमत=उदवहत्; प्राप=प्रापत्; विसस्मार=व्यस्मरत्; चकार=अकरोत्; उवास = अवसत्; सुषुवे = असूत; भेजे=अभजत; बभार = अभरत् = अवहत्; ववृते=अवर्तत=आसीत्; असंस्तुतं=अवृतम्; चेतः=मनः।

---

पञ्चदशः पाठः

# पत्रलेखनम्

मद्रास्,

ति. २०-८-१९५६.

श्रीमते

रमाकान्ताय,

हनुमान् घट्टः, काशी ।

प्रिय रमाकान्त,

अत्र सर्वे वयं दैवकृपया कुशलिनः । तत्र बन्धुवर्गसहितस्य तव कुशलं पदेपदे प्रतीक्षे ।

अहमिदानीं "परिचय" परीक्षार्थं पठामि । परीक्षा सन्निहिता वर्तते । संस्कृतभाषाप्रचारिण्या सभया प्रचाल्यमानाः परीक्षाः परिचयः, अभिज्ञः, विचक्षणः, समर्थः, कोविदः इति पञ्च सन्ति । क्रमशः ताः सर्वा अपि परीक्षाः दातुं प्रयतिष्ये । यद्यपि अहं आंग्लपाठशालायां पठामि तथापि अवकाशे संस्कृतमपि पठन् अस्मि ।

संस्कृतभाषा अतीव मधुरा । त्वमपि संस्कृतं पठित्वा परीक्षां देहि । तव प्रत्युत्तरं प्रतीक्षे ।

त्वन्मित्रम्,

रामकृष्णः.

---

षोडशः पाठः

# दिशाः



पिता – मधुसूदन, अद्य पाठशालायां किमपठः ?

मधुसूदनः - पितः, अद्य समोपाध्यायः दिशः उद्दिश्य अबोधयत्।

पिता - यदबोधयत् तत् स्मरसि वा ?

मधु - बाढम्। स्मरामि।

पिता - तथा चेत् दिशां ज्ञानोपायं विशदय।

मधु - अहं सूर्योदयकाले सूर्याभिमुखं तिष्ठामि। बाहू प्रसारयामि। तदा ममाग्रे विद्यमाना दिक् प्राची। पश्चाद्भागे विद्यमाना दिक् प्रतीची। मम दक्षिणबाहुः दक्षिणां दिशं सूचयति। वामबाहुश्चोत्तरां दिशं निरूपयति।

पिता - साधु, त्वदुक्तं साधु। तवोपाध्यायः दिशां ज्ञानाय समीचीनमुपायमबोधयत्।

मधु - तर्हि भोः पितः, सूर्यः सर्वदा प्राच्यामेव दिशि उदेति। चन्द्रस्तु कदाचित् पूर्वस्यां, कदाचित् पश्चिमायामुदेति। तत्र किं कारणम् ?

पिता - वत्स, चन्द्रः अपि सदा प्राच्यां दिश्येव उदेति। तथापि सः मध्याह्ने सूर्यस्य कान्त्या तिरस्कृतः आकाशे न दृश्यते। यदा सूर्यः अस्तं गच्छति तदा सः प्रकाशते। सूर्यास्तमय-समये चन्द्रः यत्र विद्यते तत्रैव शोभते।

मधु - पितः, पूर्णिमायामेव कुतः चन्द्रः पूर्णः भवति ?

पिता - पूर्णिमादिने सूर्यास्तमयसमये चन्द्रः प्राच्यां दिशि उदेति। तदा सूर्यस्य सर्वे किरणाः चन्द्रबिम्बे दर्पण इव पूर्णतया पतन्ति। अतः चन्द्रः पूर्णतया प्रकाशते।

मधु - प्रतिदिनं सूर्यकिरणाः सर्वेऽपि चन्द्रे न पतन्ति किम् ?

पिता - न। भूमिः सूर्यं परितः भ्रमति ; चन्द्रश्च भूमिं परितः। एवं भ्रमणे भूम्या व्यवधानात् सर्वे सूर्यकिरणाः चन्द्रोपरि एकदैव न पतन्ति। अपि तु क्रमेण अधिकतया स्वल्पतया च पतन्ति। यदा किरणानां पतनं वर्धते तदा शुक्लपक्ष इति, यदा क्षीयते तदा कृष्णपक्ष इति च उच्यते।

मधु - अपूर्वोऽयं विषयः मया ज्ञातः ! मम सहपाठकाय राम-चन्द्राय श्वः कथयिष्यामि।

पाठ्यम् —सप्तविंशति ताराश्च तथा द्वादश राशयः।
नव ग्रहाः नभोमार्गे भ्रमन्ति सततं स्वयम् ॥

प्रश्नः — पूर्णिमायामेव कुतः चन्द्रः पूर्णः भवति?

अव्ययानि — पदेपदे, इदानीं, अद्य, अतीव, सर्वदा।

वाक्येषु योजयत - बाढम्, साधु, एकदैव, क्रमेण।

---

सप्तदशः पाठः

# भारतकथा



हस्तिनापुरे धृतराष्ट्रः, पाण्डुः इति च द्वौ भ्रातरौ आस्ताम्। तयोः ज्येष्ठः धृतराष्ट्रः अन्धः। कनिष्ठः पाण्डुः पाण्डुरोगी। धृतराष्ट्रस्य शतं पुत्राः। तेषु दुर्योधनः दुःशासनश्च मुख्यौ।

पाण्डोः धर्मपुत्रः, भीमः, अर्जुनः, नकुलः, सहदेवश्चेति पञ्च पुत्राः आसन् ।

दुर्योधनादयः दुष्टाः । धर्मपुत्रादयः साधवः । पाण्डुः ऋषिशापेन दिवं प्राप । धृतराष्ट्रः पाण्डवेभ्यः अर्धं राज्यं ददौ। ते स्वराज्यं धर्मेण पालयामासुः । प्रजाः पाण्डवेषु अनुरक्ताः आसन् ।

तदसहमानः दुर्योधनः पाण्डवेभ्यः राज्यं हर्तुमुपाय-मचिन्तयत् । धर्मपुत्रः द्यूतक्रीडायां प्रीतिमान् इति ज्ञात्वा तं द्यूताय आजुहाव । दुर्योधनस्य मातुलः शकुनिः द्यूतविद्याया-मतीव समर्थः । शकुनेः धर्मपुत्रस्य च द्यूतक्रीडा प्रवृत्ता ।

तत्र प्रथमं धर्मपुत्रः राज्यं पणतया न्यक्षिपत् । वञ्चकः शकुनिः तत् अजयत् । ततः धर्मपुत्रः क्रमेण स्वपत्नीं द्रौपदीं पणमकल्पयत् । साऽपि शकुनिना जिता । तदैव दुर्योधनः दुःशासनं आहूय सभायां द्रौपद्याः मानभङ्गं कर्तुमादिदेश । दुःशासनः द्रौपद्याः वस्त्राणि सभायामाचकर्ष । द्रौपद्या सकरुणं प्रार्थितः कृष्णः तस्या वस्त्रं वर्धयित्वा मानं ररक्ष ।

ततः "द्वादशवत्सरपर्यन्तं वनवासं, त्रयोदशे वत्सरे अज्ञातवासं च कृत्वा आगच्छत, पश्चात् राज्यं दास्यामि" इत्युक्त्वा दुर्योधनः पाण्डवान् द्रौपदीं च वनाय प्रेषयामास ।

द्वादशवर्षपर्यन्तं वने पाण्डवाः बहूनि कष्टानि सोढ्वा पश्चादेकवर्ष-पर्यन्तं विराटस्य नगरे अज्ञातवासमकुर्वन्।

त्रयोदशे वर्षे पूर्णे सति पाण्डवाः दुर्योधनं "राज्यं देही" ति प्रार्थयन्त। सः "न दास्यामी" त्युवाच। ततः पाण्डवानां धार्तराष्ट्राणां च महत् युद्धमभवत्। श्रीकृष्णः पाण्डवानां पक्षे आसीत्। अतः पाण्डवाः दुर्योधनादीन् हत्वा राज्यं प्रापुः।

---

**प्रश्नाः** – धृतराष्ट्रस्य कति पुत्राः ? तेषु मुख्यौ कौ ? पाण्डोः पुत्राः के ? दुर्योधनः पाण्डवेभ्यः राज्यं कथमपजहार ? पुनः राज्य-दानाय दुर्योधनः कं नियमं कल्पितवान् ? पाण्डवानामेव युद्धे कुतः विजयः लब्धः ?

**विवरणम्** – पाण्डवाः = पाण्डोः पुत्राः, धार्तराष्ट्राः = धृतराष्ट्रस्य पुत्राः, द्रौपदी = द्रुपदस्य अपत्यं स्त्री।

**सन्धिः** – इति + उक्त्वा = इत्युक्त्वा, इति + उवाच=इत्युवाच, गुरु+ आज्ञा = गुर्वाज्ञा, धेनु + अधिपतिः=धेन्वधिपतिः, पितृ + अर्चनं=पित्रर्चनम्, भर्तृ + अनुसरणं = भर्त्रनुसरणम्।

इकारः + असवर्णः अच् = य् भवति, उकारः + असवर्णः अच् = व् भवति, ऋकारः + असवर्णः अच् = र् भवति। (यणादेशसन्धिः)

**प्रयोगविशेषः —**

(१) त्रयोदशे वर्षे पूर्णे सति (त्रयोदशवर्षाणां पूर्त्यनन्तरम्) पाण्डवाः राज्यं प्रार्थयन्त ।

(२) रामे वनं गते सति (रामवनगमनानन्तरम्) दशरथः अम्रियत ।

(३) जानक्यां आनीतायां सत्यां (जानक्याः आनयनानन्तरम्) लङ्का नाशमभजत ।

(४) स्त्रीषु दुष्टासु सतीषु (स्त्रीणां दोषात्) जायते वर्णसङ्करः ।

---

पेतः भवान् निरूपितः। तत् यावत् लग्नवेला न विचलति तावत् सत्वरमागम्यतां देवेन' इत्युत्थाय चलितः।

ततोऽसौ राज्यलोभाकृष्टः कर्पूरतिलकः शृगालवर्त्मना धावन् महापङ्के निमग्नः, शृगालैः भक्षितश्च।

"उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः"

(हितोपदेशात्)

---

**प्रश्नाः** – शृगालाः किमचिन्तयन्? वृद्धशृगालेन किं प्रतिज्ञातम्? स कथं हस्तिनं वञ्चयति स्म? अनया कथया का नीतिः ज्ञाता?

**सन्धिः** – यत् + शक्यं = यच्छक्यम्, प्राक् + शिरः = प्राक्छिरः, अप् + शक्तिः = अप्छक्तिः, द्विट् + शस्त्रम् = द्विट्छस्त्रम्, तद् + श्लोकः = तच्छ्लोकः।

(अनुनासिकभिन्नः ऊष्मभिन्नश्च हल् + श+अच् वा, अन्तस्थः वा, अनुनासिकः वा चेत् शवर्णस्य छवर्णः भवति)

**प्रयोगविशेषः** —

विना राज्ञा अवस्थातुं युक्तम्।

विना राजानं ,,

विना राज्ञः ,,

धनं विना, धनेन विना, धनात् विना जीवनं कष्टम्।

(विना योगे द्वितीया, तृतीया, पञ्चमी वा विभक्तिः प्रयुज्यते)

एकोनविंशः पाठः

# दिलीपचरितम्



अस्ति सूर्यवंशे दिलीपो नाम राजा। तस्य सुदक्षिणा नाम्नी अनुरूपा भार्या बभूव। चिरादपि तयोः दम्पत्योः सन्ततिः नाभवत्। तेन खिन्नौ तौ जम्पती स्वकुलगुरोः वसिष्ठस्य आश्रमं प्राप्य तस्मै निवेदयामासतुः।

महर्षिः योगदृष्ट्या पुत्रविघ्नकारणं ज्ञात्वा राजानमेवमाह — "राजन्! पुरा त्वं देवनगरे इन्द्रं संसेव्य प्रतिनिवर्तमानः मार्गस्थायाः कामधेनोः प्रदक्षिणं न कृतवान्। तेन क्रुद्धा

कामधेनुः 'यावत् मम सन्ततिं न पूजयिष्यसि तावत् ते सन्ततिः न भविष्यति' इति शशाप। अतः त्वं तस्याः सुतां नन्दिनीमिमामाराधय। अस्याः अनुग्रहेण तव पुत्रः भविष्यति" इति।

अथ तौ दम्पती तदाज्ञां शिरसा वहन्तौ तदाश्रमस्थां नन्दिनीनाम्नीं धेनुं तृणदानेन, जलपायनेन, अभिषेकादिभिश्च सम्यक् पूजयामासतुः। तेन भृशं सन्तुष्टा नन्दिनी अमृततुल्यं क्षीरं ताभ्यां ददौ।

अचिरादेव सुदक्षिणा गर्भिणी जाता। पूर्णे नवमे मासे सुदक्षिणा सुकुमारं कुमारं सुषुवे। दिलीपः तस्य 'रघुः' इति नाम चकार। तस्यैव वंशः रघुवंश इति प्रसिद्धिं प्राप। 'रघुवंश' नामकं काव्यमपि कालिदासेन विरचितम्।

---

प्रश्नाः – दिलीपस्य कुतः सन्ततिः नाभवत्? वसिष्ठः कमुपायमवोचत? नन्दिनी नाम का? दिलीपः नन्दिनीं कथमाराधयत्? दिलीपस्य पुत्रः कः? कामधेनुः दिलीपं कथमशपत्?

रघुवंशे – तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव॥

प्रयोगः – कर्तरिप्रयोगः

अहं पाठं पठामि
त्वं पाठं पठसि
सः पाठं पठति
(कर्ता प्रथमाविभक्तौ
कर्म द्वितीयाविभक्तौ)

कर्मणिप्रयोगः

मया पाठः पठ्यते
त्वया पाठः पठ्यते
तेन पाठः पठ्यते
(कर्ता तृतीयाविभक्तौ)
कर्म प्रथमाविभक्तौ
क्रियापदं यकारसहितं
आत्मनेपदञ्च भवति)

अमरकोशः – दम्पती जम्पती जायापती भार्यापती च तौ।

---

विंशः पाठः

# पत्रालयः

सुशीला - सखि कमले, कुत्र वेगेन गच्छसि ?

कमला - पत्रालयं प्रति गच्छामि किल।

सु - पत्रालये किं करिष्यसि ?

क - पत्रपेटिकायां पत्रं निक्षेप्स्यामि।

सु - किं तत् पत्रम् ?

क - तद्धो, मे भ्राता दिल्लीनिवासिने स्वमित्राय लिखतवान्। तत् पत्रपेटिकायां पत्रं प्रक्षिपेत्युक्तवान्। तदादाय गच्छामि।

सु - अस्तु। त्वं पत्रपेटिकायां पत्रं प्रक्षिपसि चेत् तत् कथं दिल्लीस्थं ते भ्रातुः मित्रं प्राप्नोति? न हि अस्माकमिव पत्रस्य पादौ स्तः।

क - अहो! एतदपि न जानासि?

सु - न जानामि खलु।

क - तर्हि शृणु। पत्रपेटिकायां पत्रेषु प्रक्षिप्तेषु सत्सु, नियतसमये पत्रालयभृत्यः तानि पत्राणि पेटिकातः गृह्णाति। पत्रोपरि विद्यमानायाः मूल्यचीटिकाया उपरि तिथिसहितां स्थान-मुद्रामङ्कयति।

सु - ततस्ततः?

क - ततः समानस्थाननामवन्ति पत्राणि एकीकृत्य, पृथक् पृथक् सञ्चिकासु निक्षिप्य बध्नाति। अनन्तरं पत्रवाहकाः एकैकां सञ्चिकां आदाय तत्तत्स्थानं प्रति धावन्ति। अथवा धूम-शकटं बाष्पशकटं वा प्रापयन्ति।

सु - अहो, रसवान् खल्वयं विषयः! ततस्ततः?

क - ततः तत्रत्यस्थानिकः पत्रालयभृत्यः स्वग्रामनामाङ्कितां संचिकां गृहीत्वा पत्रालयं गच्छति । तत्र पत्राणामुपरि तत्प्राप्तिदिनमुद्रां अङ्कयति ।

सु - ततस्ततः ?

क - ततः पत्रदाता तानि पत्राणि गृहीत्वा तत्तन्नामवते ददाति ।

सु - प्रियसखि, अद्य त्वन्मुखात् अपूर्वं कञ्चित् विषयमहं ज्ञातवती ।

क - अहो ! त्वया सह भाषमाणया मया महान् कालो नीतः । पश्चादागत्य अन्यानपि विषयान् कथयामि । नमस्ते ।

सु - नमस्ते ।

---

**पाठ्यम्** – पत्रालये पत्रपेट्यां पत्रं पातितमात्मना ।
तिथिमुद्राङ्कितं धूमशकटे व्योमयानके ॥
नीतं पुनर्मुद्रितञ्च पत्रदाता प्रदीयते ।
छन्नलेखः पोटलिका द्रव्यादेशोऽपि तत्समाः ॥

**प्रश्नः** – पत्रपेटिकायां पत्रं निक्षिपसि चेत् कथं मित्रं प्राप्नोति ?

**लिङ्गपरिवर्तनम्** – लिखितवान् — लिखितवती, ज्ञातवान् — ज्ञातवती, कृतवान् — कृतवती, उक्तवान् — उक्तवती ।

**प्रयोगविशेषः** — पेटिकायां पत्रं निक्षिपसि चेत् (यदि) कथं मित्रं प्राप्नोति ? पुरुषः विद्यां सम्पादयेत् यदि (चेत्) तर्हि (तदा) पूजनीयो भवेत् । यदि चेत् – तर्हि तदा = हेतुहेतुमद्भावः ।

एकविंशः पाठः

# मुनिः मूषिकश्च



अस्ति गौतमस्य मुनेस्तपोवने महातपा नाम मुनिः। तेन आश्रमसन्निधाने मूषिकशावको काकमुखाद्भ्रष्टो दृष्टः। तेन दयायुक्तेन सः नीवारकणैः संवर्धितः। तं च मूषिकं खादितुं यत्नादन्विष्यन् बिडालो मुनिना दृष्टः। ततो भीतो मूषिकः मुनिना तपःप्रभावात् बिडालः कृतः। स बिडालः कुक्कुरात् बिभेति स्म। ततोऽसौ कुक्कुरः कृतः। सोऽपि व्याघ्रात् अबिभ्यत्। ततोऽसौ व्याघ्रः कृतः। अथ व्याघ्रमपि तं मुनिः

मूषिकनिर्विशेषं पश्यति स्म। अतः सर्वे तत्रत्याः जनाः तं मुनिं व्याघ्रं च दृष्ट्वा वदन्ति — "अनेन मुनिना मूषिकोऽयं व्याघ्रतां नीतः" इति।

एतत् श्रुत्वा व्याघ्रः सव्यथोऽचिन्तयत् — 'यावदयं मुनिः जीविष्यति तावदिदं मम स्वरूपाख्यानमकीर्तिकरं न पलायिष्यते' इति। समालोच्यैवं स मुनिं हन्तुं समुद्यतः। मुनिना तस्य चिकीर्षितं ज्ञात्वा 'पुनर्मूषिको भव' इत्युक्त्वा मूषिक एव कृतः।

"नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति"

(हितोपदेशात्)

---

**प्रश्नाः** — मूषिकः मुनिना कुत्र दृष्टः? मुनिः मूषिकं कुतः व्याघ्रं कृतवान्? व्याघ्रः किमचिन्तयत्? सः कथं पुनः मूषिकः अभवत्? अनया कथया का नीतिः बोध्यते?

**प्रयोगविशेषः** — यावत् अयं मुनिः जीविष्यति तावत् इदं न पलायिष्यते। यावत् रामः पर्णशालामागच्छत् तावत् रावणः सीतामपाहरत्।

(यावत् – तावत् = तदन्तरे अथवा तत्पूर्वमेव)



### त्रयोविंशः पाठः

# धातुपाठः - 1

## 'कृञ्' करणे

वर्तमानकालः

| ए. | द्वि. | ब. |
|---|---|---|
| करोति | कुरुतः | कुर्वन्ति |
| करोषि | कुरुथः | कुरुथ |
| करोमि | कुर्वः | कुर्मः |

भूतकालः

| ए. | द्वि. | ब. |
|---|---|---|
| अकरोत् | अकुरुतां | अकुर्वन् |
| अकरोः | अकुरुतम् | अकुरुत |
| अकरवं | अकुर्व | अकुर्म |

भविष्यत्कालः

| ए. | द्वि. | ब. |
|---|---|---|
| करिष्यति | करिष्यतः | करिष्यन्ति |
| करिष्यसि | करिष्यथः | करिष्यथ |
| करिष्यामि | करिष्यावः | करिष्यामः |

विधिः

| ए. | द्वि. | ब. |
|---|---|---|
| करोतु, कुरुतात् | कुरुतां | कुर्वन्तु |
| कुरु, कुरुतात् | कुरुतं | कुरुत |
| करवाणि | करवाव | करवाम |

# चतुर्विंशः पाठः

# धातुपाठः - 2

## 'भू' सत्तायाम् (परस्मैपदी)

### वर्तमानकालः (लट्)

| | | |
|---|---|---|
| भवति | भवतः | भवन्ति |
| भवसि | भवथः | भवथ |
| भवामि | भवावः | भवामः |

### भविष्यत्कालः (लृट्)

| | | |
|---|---|---|
| भविष्यति | भविष्यतः | भविष्यन्ति |
| भविष्यसि | भविष्यथः | भविष्यथ |
| भविष्यामि | भविष्यावः | भविष्यामः |

### भूतकालः (लङ्)

| | | |
|---|---|---|
| अभवत् | अभवतां | अभवन् |
| अभवः | अभवतं | अभवत |
| अभवम् | अभवाव | अभवाम |

### पुराणभूतकालः (लिट्)

| | | |
|---|---|---|
| बभूव | बभूवतुः | बभूवुः |
| बभूविथ | बभूवथुः | बभूव |
| बभूव | बभूविव | बभूविम |

### विधिः (लोट्)

| | | |
|---|---|---|
| भवतु, भवतात् | भवतां | भवन्तु |
| भव, भवतात् | भवतं | भवत |
| भवानि | भवाव | भवाम |

## पञ्चविंशः पाठः

# संख्याः

एकम्
दश
विंशतिः
एकविंशतिः
द्वाविंशतिः
त्रयोविंशतिः
चतुर्विंशतिः
पञ्चविंशतिः
षड्विंशतिः
सप्तविंशतिः
अष्टविंशतिः
ऊनत्रिंशत्
त्रिंशत्
एकत्रिंशत्
द्वात्रिंशत्
त्रयस्त्रिंशत्
चतुस्त्रिंशत्
पञ्चत्रिंशत्
षट्त्रिंशत्
सप्तत्रिंशत्
अष्टत्रिंशत्
ऊनचत्वारिंशत्
चत्वारिंशत्

एकचत्वारिंशत्
द्विचत्वारिंशत्
त्रिचत्वारिंशत्
चतुश्चत्वारिंशत्
पञ्चचत्वारिंशत्
षट्चत्वारिंशत्
सप्तचत्वारिंशत्
अष्टचत्वारिंशत्
ऊनपञ्चाशत्
पञ्चाशत्
चतुष्पञ्चाशत्
ऊनषष्टिः
षष्टिः
चतुःषष्टिः
ऊनसप्ततिः
सप्ततिः
चतुस्सप्ततिः
ऊनाशीतिः
अशीतिः
एकाशीतिः
द्व्यशीतिः
त्र्यशीतिः
चतुरशीतिः

पञ्चाशीतिः
षडशीतिः
सप्ताशीतिः
अष्टाशीतिः
ऊननवतिः
नवतिः
एकनवतिः
द्विनवतिः
त्रिणवतिः
चतुर्णवतिः
पञ्चनवतिः
षण्णवतिः
सप्तनवतिः
अष्टनवतिः
ऊनशतम्
शतम्
सहस्रम्
दशसहस्रम्
लक्षम्
दशलक्षम्
कोटिः
दशकोटिः
अर्बुदम्

# नीतिश्लोकाः

## (वर्णानुक्रमेण)

अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥ १

आत्मबुद्धिः सुखायैव गुरुबुद्धिः विशेषतः ।
परबुद्धिः विनाशाय स्त्रीबुद्धिः प्रलयावहा ॥ २

इच्छेत् चेत् विपुलां मैत्रीं त्रीणि तत्र न कारयेत् ।
वाग्वादमर्थसम्बन्धं तत्पत्नीपरिभाषणम् ॥ ३

ईर्ष्यी घृणी त्वसन्तुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते दुःखभागिनः ॥ ४

उत्तमा आत्मना ख्याताः पितुः ख्याताश्च मध्यमाः ।
अधमा मातुलात् ख्याताः श्वशुराच्चाधमाधमाः ॥ ५

ऊषरे वर्षितं नीरमुपदेशश्च मूर्खके ।
अपात्रे च कृतं दानं सद्य एव विनश्यति ॥ ६

ऋणशेषश्चाग्निशेषः शत्रुशेषस्तथैव च ।
पुनः पुनः प्रवर्धन्ते तस्मात् शेषं न रक्षयेत् ॥ ७

एकस्तपो द्विरध्यायी त्रिभिर्गीतं चतुः पथम् ।
सप्त पञ्च कृषीणां च संग्रामो बहुभिर्जनैः ॥ ८

---

नीतिश्लोकाः परिचयपाठ्यभागे अन्तर्गताः न भवन्ति ।

ऐन्द्रं वापि पदं प्राप्य नहुषो नागतां ययौ ।
महतामपकारेण को न नष्टो निवेदय ? ॥ ९

ओजसा सहितं धीरं प्रजारञ्जनतत्परम् ।
स्वयं वृणीते राज्यश्रीः सुन्दरी सुन्दरं यथा ॥ १०

औरसं कृतसम्बन्धं तथा वंशक्रमागतम् ।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥ ११

अम्भसा भिद्यते सेतुः तथा मन्त्रोऽप्यरक्षितः ।
पैशुन्याद्भिद्यते स्नेहो वाचा भिद्येत कातरः ॥ १२

कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि ।
अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ॥ १३

खरं श्वानं गजं मत्तं रण्डां च बहुभाषिणीम् ।
राजपुत्रं कुमित्रं च दूरतः परिवर्जयेत् ॥ १४

गतश्रीः गणकान् द्वेष्टि गतायुश्च चिकित्सकान् ।
गतश्रीश्च गतायुश्च ब्राह्मणान् द्वेष्टि भारत ॥ १५

घटं भिन्द्यात् पटं छिन्द्यात् कुर्याद्वा रासभस्वरम् ।
येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत् ॥ १६

चक्षुःपूतं न्यसेत् पादं वस्त्रपूतं जलं पिबेत् ।
सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत् ॥ १७

छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे ।
फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव ॥ १८

जननी जन्मभूमिश्च जाह्नवी च जनार्दनः ।
जनकः पञ्चमश्चैव जकाराः पञ्च दुर्लभाः ॥ १९

तस्करस्य कुतो धर्मः दुर्जनस्य कुतः क्षमा ।
वेश्यानां च कुतः स्नेहः कुतः सत्यं च कामिनाम् ॥ २०

स्थान एव नियोज्यन्ते भृत्याश्चाभरणानि च ।
न हि चूडामणिः पादे नूपुरं मूर्ध्नि धार्यते ॥ २१

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुंक्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ २२

धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥ २३

नदीनां नखिनां चैव शृङ्गिणां शस्त्रपाणिनाम् ।
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ॥ २४

पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम् ।
मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥ २५

फलहीनं नृपं भृत्याः कुलीनमपि चोन्नतम् ।
सन्त्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजः ॥ २६

बह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः ।
प्रभुभक्तश्च शूरश्च ज्ञातव्याः षट् शुनो गुणाः ॥ २७

भयो वा यदि वा हर्षे सम्प्राप्ते यो विमर्शयेत् ।
कृत्यं न कुरुते वेगात् न स सन्तापमाप्नुयात् ॥ २८

मक्षिका मशको वेश्या मूषको याचकस्तथा।
ग्रामणीर्गणकश्चैव सप्तैते परभक्षकाः॥ २९

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः॥ ३०

रक्षन्ति कृपणाः पाणौ द्रव्यं क्रव्यमिवात्मनः।
तदेव सन्तः सततमुत्सृजन्ति यथा मलम्॥ ३१

लालने बहवो दोषाः ताडने बहवो गुणाः।
तस्मात् पुत्रं च शिष्यं च ताडयेन्न तु लालयेत्॥ ३२

वनानि दहतो वह्नेः सखा भवति मारुतः।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम्॥ ३३

शनैः पन्थाः शनैः कन्थाः शनैः पर्वतमस्तके।
शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः॥ ३४

षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता॥ ३५

सम्पत् सरस्वती सत्यं सन्तानं सदनुग्रहः।
सत्ता सुकृतसम्भारः सकाराः सप्त दुर्लभाः॥ ३६

हतं ज्ञानं क्रियाहीनं हताश्चाज्ञानिनो नराः।
हतं चानायकं सैन्यमभर्तारो हताः स्त्रियः॥ ३७

क्षमातुल्यं तपो नास्ति न सन्तोषात् परं सुखम्।
न तृष्णायाः परो व्याधिः न च धर्मो दयापरः॥ ३८

ज्ञानविद्याविहीनस्य विद्याजालं निरर्थकम्।
कण्ठसूत्रं विना नारी ह्यनेकाभरणैर्युता॥ ३९

# कठिनशब्दार्थः

## प्रथमः पाठः

कवाटम् = Door
कुड्यम् = Wall
दारु = Timber
भित्तिः = Wall
छदनं = Roof
वितर्दिः = Verandah
गवाक्षम् = Window
द्वारम् = Entrance

## द्वितीयः पाठः

छात्रः = Student
सहपाठकः = Classmate
जानाति = He knows
पठति = Reads
कक्ष्या = Class
बोधयति = Teaches
कृष्णफलकम् = Blackboard
चत्वारिंशत् = Forty
बालः = Boy
प्रातः = Morning
सायम् = Evening
पाठशाला = School

## तृतीयः पाठः

महिषी = Buffalo
लाङ्गूलम् = Tail
क्वथयित्वा = Making boiled
श्रोत्रियाः = Well behaved
सास्ना = Dewlap
शृङ्गम् = Harn
घृतम् = Ghee
अपूपः = Cake
कापिकापानीयम् = Coffee
पृथक् = Seperate
स्वादुतरः = More tasty
पिबति = He drinks

नवनीतम् = Butter दुग्धं = Milk
वत्सः = Calf गळः = Neck
तक्रम्, दधि = Butter milk धेनुः = Cow

## चतुर्थः पाठः

कन्दुकः = Ball यतमानः = Trying
वक्रदण्डः = Bat विपक्षः = Opposite party
आह्वयत = Call अङ्घ्रिः = Foot
उत्क्षिपति = Throws यतते = Tries
अत्र = Here नैपुण्यम् = Skilness
केचित् = Some इदानीम् = Now
केचन = Some क्रीडाङ्गणम् = Play-ground

## पञ्चमः पाठः

व्याधः = Hunter तिक्तं = Bitter
सारमेयः = Dog कषायं = Astringent
हरिणः = Deer रोहन्ति = Grow
पाषाणः = Stone घ्नन्ति = They kill
केषाञ्चन = Certain (adj.) दिवा = Day time
केचित् = Some persons क्षुद्रः = Small
मृगया = Hunting गृह्णाति = Catches
इतस्ततः = Here and there सौम्यः = Gentle
हन्ति = Kill खड्गः = A rhinoceros

| | | | |
|---|---|---|---|
| उपयुज्यन्ते = Being used | | वृकः = Wolf | |
| कतिपयानि = Some | | चित्रकायः = A chita | |
| व्याघ्रः = Tiger | | गिरिः = Mountain | |
| भल्लूकः = Bear | | निलीनः = Hide | |

## षष्ठः पाठः

१. करेण पादं मुखे विनिवेश्य वटस्य पत्रस्य पुटे शेते यः मुकुन्दः तमहं मनसा स्मरामि ।

२. धवलदेहा ब्रह्मणः भार्या सरस्वती वीणां पुस्तकं च हस्तयोः धृत्वा हंसं आरुह्य वर्तते । तां शतकृत्वः नमामि ।

३. क्षीरसमुद्रात् जातां कृपायुक्तां विष्णुपत्नीं सदा सेवे । तेन सर्वाः सम्पदः समृद्धाः भविष्यन्ति ।

४. पार्वतीनन्दनं भक्तानां अनेकवरप्रदं गजमुखं एकदन्तं विघ्नेश्वरं अहनि च दिवा च सेवामहे ।

५. अहं विष्णोः पादं वन्दे, विष्णुं सर्वदा पूजयामि, विष्णोः पवित्रं नाम वदामि, शाश्वतं विष्णुतत्वं चिन्तयामि ।

६. ईश्वरः अर्धं नारी, चन्द्रकिरणवत् धवलः । चन्द्रः सूर्यः अग्निश्च तस्य नेत्राणि । तस्य शिरसि चन्द्रखण्डः वर्तते । तादृशाय ईश्वराय नमः ।

७. भक्तवरप्रदः, सकलगुणैः रम्यः, सीतामनोहरः श्रीरामः सदा अस्माकं शुभं वितरतु ।

८. लक्ष्मीनाथाय, शुभाधाराय, भक्तरक्षकाय, वेङ्कटाद्रिस्थिताय श्रीनिवासाय मङ्गलं भवतु ।

## सप्तमः पाठः

कटाहः = A shallow boiler
इक्षुः = Sugarcane
शोषयति = Makes dry
गुडम् = Jaggery
कार्मिकः = Worker
इक्षुक्षेत्रम् = Sugarcane crop
शर्करा = Sugar
ब्रूते = Tells
पर्व = Joint
वंशः = Bamboo

## अष्टमः पाठः

बुभुक्षितः = Hunger
भ्रमति = Circulates
आपूपिकः = Seller of cakes
विक्रीणाति = He sells
जम्बुकः = Fox
श्रावय = Make heard
कियत् = How much
उद्घाटितवान् = Opened
वञ्चकान्तरम् = Another fradulent
झटिति = At once
वञ्च्यते = Cheated
भाण्डम् = Basket
शाखा = Branch

## नवमः पाठः

शफः=The hoof
मूल्यम् = Price
बहुलः = In large number
गर्दभः = Donkey

तैलशकटः = Motor car

लेखवाहकः = Messenger

तुरगः = Horse

तुरङ्गः = Horse

उष्ट्रः = Camel

उत्सवयात्रा = Festival procession

कृषति = Ploughs

भूस्वामी = Land lord

योधः = Warrior

## दशमः पाठः

कृषीवलः = Farmer

व्रीहिः = Paddy

धान्यगुच्छः = Bunch of grains

लवित्रम् = A sickle

खलः = Place of grains

उलूखलम् = Round stone

हलः = Plough

ततः = After

पलालम् = Dry grass

सस्यम् = Crop

मुसलः = A pestle

शूर्पः = A winnowing basket

तण्डुलः = Rice

तुषः = The husk of rice

घटीयन्त्रम् = A machine for rising water

बुसम् = Bran

पिण्याकम् = Cake

तटाकः = Tank

## एकादशः पाठः

गृही = Family man

सपत्नी = Another wife

विवदमाना = Quarelling

पितृव्यः = Peternal uncle

श्वशुरः = Father-in-law

श्वश्रूः = Mother-in-law

श्यालः = Brother-in-law (of a man)

मातुलः = Uncle

देवरः = Brother-in-law (of a woman)

पितामहः = Grand-father (P)

मातामहः = Grand-father (M)

कारागृहम् = Jail

अभणत् = Told

मातृष्वसा = Mother's sister

आवयोः = Of both

पितृष्वसा = Father's sister

दीयताम् = May be given

शयनम् = Bed

## द्वादशः पाठः

ह्रदः = Lake

वमति = Vomits

फणा = Head of snake

ददर्श = Saw

म्रियन्ते = Die (Pl.)

जगाम = Went

आरेभे = Begun

दमनम् = Killing

मृतप्रायः = Dead like

ताडयामास = Kicked

कदम्बवृक्षः = A tree of flowers

बबन्ध = Tied

## त्रयोदशः पाठः

तिथिः = Date

वर्षः = Year

मासः = Month

पक्षः = Fortnight

आम् = Yes

लभते = Gets

## चतुर्दशः पाठः

चकमे = Loved

सुषुवे = Gave brith

उपयेमे = Married

भेजे = He has sent

तिरश्चकार = Refused

उवास = Was

ययौ = Went

प्राप = Got

बभूविरे = Were

आह्वियते = Being called

चकार = Did

चिक्रीड = Played

## पञ्चदशः पाठः

प्रतीक्षे = Expecting

प्रयतिष्ये=I am going to try

तथापि = But

देहि = Give

यद्यपि = Eeven though

कुशलम् = Safe

अस्मि = I am

प्रत्युत्तरम् = Reply

## षोडशः पाठः

बाढम् = Yes

दर्पणः = Mirror

परितः = All around

प्रतीची = West

दक्षिणः = Right

क्षीयते = Reduced

अपूर्वः = Quite new

प्राची = East

वाम = Left

तराः = Stars

## सप्तदशः पाठः

ज्येष्ठः =Eldest

कनिष्ठः = Youngest

आजुहाव = Called

ददौ = Gave

द्यूतम् = Chess

पणम् = Bet

आदिदेश = Ordered

सोढा = Bear sorrow

आचकर्ष = Draw

पश्चात् = After

## अष्टादशः पाठः

हस्ती = Elephant

शृगालः = Fox

निरूपितः = Proved

सत्वरम् = Quickly

वर्त्म = Way

शक्यम् = Possible

वञ्चकः = Fox

अटवी = Jungle

## एकोनविंशः पाठः

दम्पती = Couple

जलपायनम् = To make it drink water

सुषुवे = Gave birth

आह = Told

निवेदयामास = State

शुद्धिमान् = Pure

शुद्धिमत्तरः = More pure

शशाप = Cursed

जम्पती = Couple

## विंशः पाठः

पत्रालयः = Post office

पत्रपेटिका = Post box

पत्रालयभृत्यः = Post office peon

मूल्यचीटिका = Stamp

छन्नलेखः = Cover

द्रव्यादेशः = Money order

पत्रादेशः = Postal order

स्थानमुद्रा = Office stamp

अङ्कयति = He stamps

तः = From

सञ्चिका = Bag

पत्रवाहकः = Runner

पत्रदाता = One who delivers tapals (Post man)

पोटलिका = Book post

बध्नाति = Ties

प्राप्नोति = Gets

## एकविंशः पाठः

| | | | |
|---|---|---|---|
| शावकः | = Child | कुक्कुरः | = Dog |
| नीवारकणाः | = Bits of grains | बिडालः | = Cat |
| व्याघ्रः | = Tiger | मूषिकनिर्विशेषः | = Nothing but mouse |
| चिकीर्षितम् | = Wanted to do | | |
| इच्छति | = Wants | बिभेति | = Fears |

## द्वाविंशः पाठः

| | | | |
|---|---|---|---|
| प्रजावती | = Sister-in-law | ननान्दा | = Niece |
| जामाता | = Son-in-law | पितामही | = Grand-mother(P) |
| स्नुषा | = Daughter-in-law | मातामही | = Grand-mother(M) |
| याता | = Daughter-in-law | मातुलानी | = Uncle's wife |

